संस्कृतविद्यासमितेः

# धातुमाला

प्रथमो भागः

सङ्कलयिता

वैद्य.शि.वे. राधाकृष्ण शास्त्री

# தாதுமாலா

முதல் பாகம்

தொகுத்தவர்

வைத்ய S.V. ராதாகிருஷ்ண சாஸ்திரி

ஸம்ஸ்க்ருதஸ்ரீ ஆசிரியர்

வெளியிடுபவர் :

ஸம்ஸ்க்ருத எஜுகேஷன் ஸொஸைடி

(ரிஜிஸ்டர்டு)

148-150, லஸ்சர்ச் ரோடு, மைலாப்பூர், சென்னை-600 004.

2002

संस्कृतविद्यासमितेः

# धातुमाला

प्रथमो भागः

सङ्कलयिता

वैद्य.शि.वे. राधाकृष्ण शास्त्री

# தாதுமாலா

முதல் பாகம்

தொகுத்தவர்

*வைத்ய S.V. ராதாகிருஷ்ண சாஸ்திரி*

ஸம்ஸ்க்ருதஸ்ரீ ஆசிரியர்

*வெளியிடுபவர் :*

ஸம்ஸ்க்ருத எஜுகேஷன் ஸொஸைடி

*(ரிஜிஸ்டர்டு)*

*148–150, லஸ்சர்ச் ரோடு, மைலாப்பூர், சென்னை-600 004.*

2002

## PREFACE

Dhatu-Mala, meaning "Boquet of Root-forms" relates to one of the most important aspects of the study of grammar. The Sanskrit language is "well-structured" (Samyak Krtam) and definitive in comparison with other world languages on account of its analytic approach and well settled word construction. Herein, basic forms of words have been analysed under four definitive classes, nama (noun), kriyapadam (verb), upasarga (preposition), and nipata (particle). The primaries of each of these classes have been collected and presented systematically in texts like the Dhatupatha and Namalinganusasana, with the directions needed for word-formation.

The Madras Samskrit Education Society has already issued a Sabda-Manjari, being a "Boquet of Nominal forms". This book sets out the nouns, as classified according to their endings, being the short and long vowels and the consonants, in their full-fledged forms of their declension. Exceptions and pecularities have also been pointed out.

The present publication, Dhatu-mala which is issued as a complement, is a classified and analytical presentation of the models of full-fledged forms of 300 Sanskrit verbs. The ten ganas (conjugational groups), such as bhvadi, adadi etc., both in their parasmaipadi and atmanepadi variants have been set out here in all their moods and tenses. Such variations and peculiarities relating to particular conjugations or individual verbs or group of verbs have been pointed out. It is expected that the present handbook will enable the verbal forms in Sanskrit being easily memorized and used for reference as our Sabdamanjari in the case of nouns.

It might be pertinent, in this connection, to make a mention of the work done by the Madras Samskrit

Education Society in the field of Sanskrit. The Society has been for many years now, conducting graded classes in Sanskrit, towards which it has issued a 6-volume Samskrita-Sri Pathamala. A monthly journal. Samskrita-Sri has regular sections in Sanskrit grammar, vocabulary with Tamil meanings, explanation on Derivation, List of Sanskrit words with parallels in Tamil and the like. It has issued an intensive work on Sanskrit grammar entitled New Model Sanskrit Grammar (1984) is about 500 pages. Another work entitled Avyaya-kosa being a Dictionary of Indeclinable in more than 400 pages treats 873 indeclinables with reference to sources and additional roots. Its magnum opus is the 5 volume Krdanta-rupamala (1965) being "A Concordance of Verbal derivatives" dealing with verbal forms and derived forms for about 2000 roots in Sanskrit, in a detailed fashion.

In this context, we would like to offer our sincere and grateful thanks to Sri. S.V. Radhakrishna Sastri who has taken great pains to complete this first part of Dhatumala with great care. We hope to bring out many more such volumes with his invaluable assistance.

**P.V. Sivarama Dikshitar**
President

Sanskrit Education Society (Regd.,)
148-150, Luz Chur Road,
Mylapore, Chennai-600 004.

# विषयपट्टिका

# धातुमाला

## विषयनिर्देशक्रमः

पाणिनिः धातून् पठति क्रमशः। स उपदेशः धातुपाठः इति प्रसिद्धः। २०३९ (नवत्रिंशदधिक द्विसहस्र) धातवः पठिताः दशसु विकरणेषु। ते पुनः द्वेधा परस्मैपदिनः आत्मनेपदिनः इति। धातुपाठे धातोः प्रसिद्धः अर्थः निर्दिष्टः भू सत्तायां एध वृद्धौ इति। तत्र निर्दिष्टः अर्थः प्रधानः। तस्मात् भिन्नोऽप्यर्थः व्यवहारे दृश्यते। उपसर्गः धातोः पूर्वं युज्यते। उपसर्गेण धातोः भिन्न भिन्नोऽप्यर्थो नैकः व्यवहारे उपलभ्यते।

परस्मैपद्यपि धातुः विशिष्टेऽर्थे आत्मनेपदी भवति। आत्मनेपदी च परस्मैपदी। कश्चन धातुपाठे एव उभयपदी निर्दिष्टः। जि जये ( ) इति धातुः पाठे परस्मैपदी। जयति अजयत् इत्यादिरूपं भजते। स एव वि परा इति उपसर्गयोगे आत्मनेपदी भवति। विजयते पराजयते इत्यादिरूपाणि भजते। आत्मनेपदी रमु (१०३) धातुः वि-आ-परि-उपसर्ग योगे परस्मैपदी भवति। विरमति आरमति परिरमतीति रूपाणि भजते। 'उप' योगे उभयपदी उपरमति-उपरमते इति।

धातुः सकर्मकः इति निर्दिश्यते यदि धात्वर्थः कर्मण्यन्वेति। यथा रामः ग्रामं गच्छति। सः अकर्मको भवति यदि कर्मणि नान्वेति। यथा रामः राजा भवति। भूधातुः अकर्मकः। अकर्मकत्वेन निर्दिष्टो धातुः कस्मिंश्चिदर्थे सकर्मको भवति - यथा राजा जयति। अत्र अकर्मकः। 'रामः वालिनं जयति'। अत्रायं सकर्मकः। 'जि' धातुः पराभवार्थे सकर्मकः। तथैव अकर्मकोऽपि धातुः उपसर्गयोगेन सकर्मकोऽपि भवति। यथा रामः सुखं अनुभवति इत्यत्र। अतः क्वचित् प्रकृत्या सकर्मको धातुः अर्थभेदेन उपसर्गयोगेन अकर्मकोऽपि भवति। अन्यथापि क्वचित्।

धातवः तिङन्ताः कृदन्ताश्च दृश्यन्ते। तिङ् प्रत्यय-योगे तिङन्ताः। यथा लट् प्रत्यययोगेन भूधातुः, भवति भवतः भवन्ति इति रूपाणि भजते। कृत्प्रत्यय योगे कृदन्तः, भूत्वा भवितुं भवन् भवनं इत्यादि रूपाणि भजते। कृत्प्रत्यय योगे धातवः अव्ययानि सुबन्ताश्च भवन्ति।

धातुः, सेट् अनिट् विकल्पितेट् (वेट्) इति त्रेधा व्यवह्रियते। एष व्यवहारः प्रायोदर्शनात्। क्वचित् अनिडपि सेट् भवति, सेडपि अनिट् विशिष्ट-प्रत्यययोगे।

दश लकाराः लट् लिट् लुट् लृट् लोट् लङ् विधिलिङ् आशीर्लिङ् लुङ् लृङ् इति। तत्र लट् लङ् लोट् विधिलिङ् इति चत्वारः सार्वधातुकाः, अन्ये षट् आर्धधातुकाः। एषु भिन्नभिन्नः प्रत्यययोगो दृश्यते। लेट् इति वेद एव प्रयुज्यमानो लकारः एकादशः। न लोके। अतः तस्य रूपाणि न दीयन्ते।

धातुपाठे पठितेषु द्विसहस्राधिकेषु धातुषु अत्र शतत्रयमेव गृह्यते, भूयसा उपयुज्यमाना एते इति धिया। अन्येऽपि बहवः तत्र तत्र प्रयोगे दृश्यन्त एव। शिक्षणाय प्रथममुपात्ता एते। अपेक्षासत्वे अन्येषामपि यथायोगं शिक्षणे निवेशः संपद्येतैव।

दशसु विकरणेषु पठितेभ्यः एवं संग्रहणं कृतम्।

| | | |
|---|---|---|
| १. शब्विकरणं-भ्वादयः | १५३ | १-१५३ |
| २. लुग्विकरणं-अदादयः | ३० | २१४-२४३ |
| ३. श्लुविकरणं-जुहोत्यादयः | ८ | २४४-२५१ |
| ४. श्यन्विकरणं-दिवादयः | ४० | १७४-२१३ |
| ५. श्नुविकरणं-स्वादयः | ७ | २५२-२५८ |
| ६. शविकरणं-तुदादयः | २० | १५४-१७३ |
| ७. श्नंविकरणं-रुधादयः | १० | २५९-२६८ |
| ८. उविकरणं-तनादयः | ३ | २६९-२७१ |

धातुपाठे एष एव क्रमो दृश्यते। परं शिक्षणे समानरूपवतां सुकरावगाहानां प्रथमं उपादानं युज्यते इति धिया भ्वादयः तुदादयः दिवादयश्च प्रथमं दर्शिताः। ततः अदादयः जुहोत्यादयः इत्यादिः क्रमः। "भवति भवतः भवन्ति" "तुदति तुदतः तुदन्ति" "दीव्यति दीव्यतः दीव्यन्ति" इति आपाततः समानानि रूपाणि प्रथम गृहीतेषु त्रिषु विकरणेषु। उत्तरत्र अत्ति जुहोति सुनोति रुणद्धि तनोति क्रीणाति इति असुकरावगाहः प्रयोगः।

दशसु लकारेषु लट्-लङोः लृट्-लृङोश्च प्रायः समानानि रूपाणि इति ते सहपठ्यन्ते। विधिलिङ् - आशीर्लिङोः साम्येऽपि विधिलिङ् सार्वधातुके, आशीर्लिङ् आर्धधातुके च पदं लभेते इति न सहपाठः।

यदा धातोः क्रियावृत्तिः वर्तमाना तदा लट्। क्रियावृत्तिर्यदि भूता तदा लङ् लिट् लुङ् च। क्रियावृत्तिर्यदि भविष्यन्ती तदा लुट् लृट् च। विधौ निमन्त्रणे आमन्त्रणे अधीष्टे संप्रश्ने प्रार्थनायां आशिषि च क्रियावृत्तौ लोट् विधिलिङ् आशीर्लिङ् च। हेतुहेतुमद्भावादौ विवक्षिते लृङ्।

तत्रायं विशेषः। भूतत्वमात्र विवक्षायां लुङ्। भविष्यत्व मात्र विवक्षायां लृट्। यदि भूतोऽर्थः नाद्यतनः कर्त्रा अदृष्टः स्मृतिमात्रगम्यः परोक्षश्च तदा लिट्। भूतोऽर्थः अनद्यतनः अपरोक्षश्च (प्रत्यक्षतयाऽनुभूतः) तदा लङ्। तथैव भविष्यदर्थः यद्यनद्यतनः कदापि भविता, तदा लुट्। क्रियानिर्वर्तनं भविष्यत् अस्मिन् क्षणे, अतः परं यदाकदाचित् इति सामान्यतः भविष्यत्वमात्र विवक्षायां लृट्।

विधिः- भृत्यादेः कृत्ये प्रवर्तनम्। निमन्त्रणं - आवश्यके कर्मणि प्रवर्तनम्। आमन्त्रणं - एवं वा अन्यथा वा क्रियतां इति कर्मणि यथेच्छं प्रवृत्तौ अभ्यनुज्ञानम्। अधीष्टः-सत्कारपूर्वकं चोदनम्। संप्रश्नः - इदं कार्यं न वेति

विचार्य निर्धारणम्। प्रार्थना - याच्ञा। आशीः - प्रतीक्षा शुभा। एष्वर्थेषु वाच्येषु द्योत्येषु च लोटः विधिलिङश्च प्रवृत्तिः। विधिलिङा विहितस्य करणेऽकरणे च विधेयस्येच्छा प्रभवति। आशिषि आशीर्लिङः। हेतुहेतुमद्भावादौ भविष्यति अर्थे यदि क्रियाया अनिष्पत्तिः गम्यमाना तदा लृङ्।

लकारा दशैते सकर्मकेभ्यो धातुभ्यः कर्मणि कर्तरि च प्रयोगे स्युः। अकर्मकेभ्यः भावे कर्तरि च। लडादीनां सामान्यतः लकाराः इति निर्देशः। अष्टादश लकारादेशाः (लादेशाः)। तत्र प्रथमे नव परस्मैपदे, उत्तरे नव आत्मनेपदे च उपयुज्यन्ते। त एते सङ्गृह्यन्ते प्रत्याहार विधया।

**तिप्-तस्-झि-सिप्-तस्-थ-मिब् वस् मस्।**
**त-आतां-झ-थास्-आथां-ध्वं-इड् वहि महिङ्॥**

इति तत्सूत्रम्। आद्यं तिकारं अन्त्यंङ्कारं च संयोज्य तिङ्-तिङन्ताः इति व्यवहारः। 'त' प्रभृति ङ्कारं। यावत् तङ् इति आत्मनेपद प्रत्ययाः। ति-मस् इति प्रथमे त्रयस्त्रिकाः परस्मैपदप्रत्ययाः। क्रियाफले कर्तृगामिनि आत्मनेपदं, अन्यगामिनि परस्मैपदं इति काचन व्यवस्था यद्युभयपदी धातुः। अन्यत्र प्रायः आत्मनेपदनिमित्तहीने परस्मैपदं युज्यते।

तिङ् प्रत्ययेषु तिप् तस् झि इति त्रयः प्रथमपुरुष संज्ञकाः, सिप् थस् थ इति त्रयो मध्यमपुरुषः, मिब्-वस् - मस् इति त्रयः उत्तमपुरुषः परस्मै पदे। त-आतां झ इति त्रयः प्रथमपुरुषः, थास् आथां ध्वं इति त्रयः मध्यमपुरुषः, इड् वहि महि इति त्रयः उत्तमपुरुषः आत्मने पदे। युष्मदि वाच्ये द्योत्ये च मध्यमः। अस्मदि वाच्ये द्योत्ये च उत्तमः। शेषे प्रथमः। तत्र सुबन्तेष्विव एकवचन-द्विवचन-बहुवचनानि। अत एव नव नव प्रत्ययाः परस्मैपदे आत्मनेपदे च। भवतीत्यादिरूपेषु भव इति अंशः अङ्गसंज्ञः। ति इत्यंशः प्रत्ययः।

तत्र विकरण द्योतकाः प्रत्यया विशिष्टा वर्तन्ते। शप्-शविकरणयोः 'अ', श्यन्विकरणे 'य' श्नुविकरणे 'नु' श्नंविकरणे 'नं', उविकरणे 'उ'

श्नाविकरणे 'ना', णिज्विकरणे 'अय' इति विकरण प्रत्ययाः । लुक्-श्लु विकरणयोः विकरण प्रत्ययौ न स्तः । स्वार्थे णिच्(अय) णिंज्विकरणे । कर्मणि णिच् दशस्वपि विकरणेषु ।

लकारेषु लट् लङ् लोट् विधिलिङ् च विकरणप्रत्ययार्हाः । त एव सार्वधातुकलकाराः प्रथिताः । लिट् लुट् लृट् आशीर्लिङ् लुङ् लृङ् इति षट् विकरण प्रत्ययानर्हाः आर्धधातुकाः । यद्यपि तिप्-तस्-झि इत्यादि पुरुषत्रय-वचनत्रय-रूपाणि नव नव च सङ्गृहीतानि तिङ्प्रत्याहारेण । परं तेषां प्रतिलकारं प्रतिपुरुषं प्रतिवचनं परिणिष्ठितानि रूपाणि पृथक् पृथक् दीयन्ते शिक्षणे लाघवाय उभयोः पदयोः । प्रथमपुरुषे - एकवचनं द्विवचनं बहुवचनं, मध्यमपुरुषे एकवचनं द्विवचन बहुवचनं, उत्तमपुरुषे एकवचनं द्विवचनं बहुवचनं इति रूपनवक क्रमेण । परस्मैपदे, विधिलिङि द्वे रूपनवके, लुङि षट्, अन्यत्र एकैकं रूपनवकम् । आत्मनेपदे लटि द्वे, लङि द्वे, लोटि द्वे, लुङि चत्वारि, अन्यत्र एकैकम् । निष्पत्तौ तत्र तत्र विशेषो दृश्येतापि ।

**परस्मै पदे - लटि** - ति तः अन्ति । सि थः थ । मि वः मः ।

**लङि** - त् तां अन् । : तं त । म् व म ।

**लोटि** - तु तां अन्तु । – तं त (अथवा) हि तं त । आनि आव आम ।

**विधिलिङ्** - ईत् ईतां ईयुः । ईः ईतं ईत । ईयं ईव ईम ।

(अथवा) यात् यातां युः । याः यातं यात । यां याव याम ।

**लिटि** - अ अतुः उः । थ अथुः अ । अ व म ।

**लुटि** - ता तारौ तारः । तासि तास्थः तास्थ । तास्मि तास्वः तास्मः ।

**लृटि** - स्यति स्यतः स्यन्ति । स्यसि स्यथः स्यथ । स्यामि स्यावः स्यामः ।

**लृङि** - स्यत् स्यतां स्यन्। स्यः स्यतं स्यत। स्यं स्याव स्याम।

**आशीर्लिङि** - यात् यास्तां यासुः। याः यास्तं यास्त। यासं यास्व यास्म।

**लुङि** - १. त् तां उः। : तं त। अं व म।

२. अत् अतां अन्। अः अतं अत। अं आव आम।

३. सीत् सिष्टां सिषुः। सीः सिष्टं सिष्ट। सिषं सिष्व सिष्म।

४. सत् सतां सन्। सः सतं सत। सं साव साम।

५. सीत् स्तां सुः। सीः स्तं स्त। सं स्व स्म।

६. ईत् इष्टां इषुः। ईः इष्टं इष्ट। इषं इष्व इष्म।

**आत्मने पदे - लटि** - १. ते इते अन्ते। से इथे ध्वे। इ वहे महे।

२. ते आते अते। से आथे ध्वे। ए वहे महे।

**लङि** - त इतां अन्त। थाः इथां ध्वं। इ वहि महि।

२. त आतां अत। थाः आथां ध्वं। इ वहि महि।

**लोटि** - तां इतां अन्तां। स्व इथां ध्वं। ऐ आवहै आमहै।

२. तां आतां अन्तां। स्व आथां ध्वं। ऐ आवहै आमहै।

**विधिलिङ्** - ईत ईयातां ईरन्। ईथाः ईयाथां ईध्वं। ईय ईवहि ईमहि।

**लिटि** - ए आते इरे। से आथे ध्वे। ए वहे महे।

**लुटि** - ता तारौ तारः। तासे तासाथे ताध्वे। ताहे तास्वहे तास्महे।

**लृटि** - स्यते स्येते स्यन्ते। स्यसे स्येथे स्यध्वे। स्ये स्यावहे स्यामहे।

**लृङि** - स्यत स्येतां स्यन्त। स्यथाः स्येथां स्यध्वम्। स्ये स्यावहि स्यामहि।

आशीलिङ् - सीष्ट सीयास्तां सीरन्। सीष्ठाः सीयास्थां सीध्वं। सीय सीवहि सीमहि।

लुङ् - १. अत एतां अन्त। अथाः एथां अध्वं। ए आवहि आमहि।

२. सत सातां सन्त। सथाः साथां सध्वं। सि सावहि सामहि।

३. स्त सातां सत। स्थाः साथां ध्वं। सि स्वहि स्महि।

४. इष्ट इषातां इषत। इष्ठाः इषाथां इड्ढ्वं-इध्वं। इषि इष्वहि इष्महि।

एते प्रत्ययाः अङ्गैः सह योगकाले प्रायः समानानि रूपाणि भजन्ते। क्वचित् सेट् - अनिट् - वेट् त्वेन रूपभेदं लभन्ते च। अत एवेयं धातुमाला केषुचित् लकारेषु त्रिपुरुषत्रिवचन रूपाणि दत्ते, क्वचिच्च लकारप्रथमपुरुषै कवचनदानेन कृतार्था भवति। क्रमशः प्रतिधातु रूपाणामभ्यासेन धातुरूपनिष्पत्तिः पूर्णा अवगाहपथमधिगच्छति। परस्तात् दिङ्मात्रो दाहरणेन शिष्टानामूहे प्रभवामः। व्याकरणनियमानामवगाहः सतताभ्यासेनैव जायते।

प्रतिधातु कर्मणि भावे णिचि सनिच तिङन्त प्रथमपुरुषैकवचन रूपाणि दत्तानि। त्त्वा - ल्यप् - तुमुनन्तानां अव्ययरूपाणि, क्त - क्तवतु - शतृ - शानच् - सन् - ल्युट् - ण्वुल - क्तव्य - ण्यत् - अनीयर् - तृजन्तानां सुबन्त-रूपाणि दत्तानि। तत्र विशेषणभूतानि त्रिषु लिङ्गेषु यथायथम् ऊह्यानि। यथा कृतवान् कृतवती कृतवत् - कुर्वन् - कुर्वती - कुर्वत्, कुर्वाणः कुर्वाणा कुर्वाणं, चिकीर्षन् चिकीर्षन्ती चिकीर्षत्, कारकः कारिका कारकं, कर्तव्यः कर्तव्या कर्तव्यं, कार्यः कार्या कार्यं, करणीयः करणीया करणीयं, कर्ता कर्त्री कर्तृ इति लिङ्गानुसरीणि रूपाणि ऊह्यानि।

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते इति सूक्तिः। तदनुसृत्य उपसर्गेण योगे भिद्यमानोऽर्थः पृथग्दर्शितः। यत्र उपसर्ग योगे अर्थभेदो नास्ते, तत्र जोषंभाव आदृतः। कचित् विशिष्ट प्रतिनियत प्रत्ययादि योगेन अर्थविशेषे दृष्टे

तानि रूपाण्यपि अन्ते सङ्गृहीतानि, अस्माद्धातोरिमे विशिष्टाः शब्दा निष्पन्नाः इति ज्ञानाय।

शब्दस्य अर्थो न नियतः। प्रधानो गौणश्चेति अर्थो द्वेधा। प्रधानः कोशेषु दीयते। विवक्षाधीना अर्था नैके। ते गौणाः। न कोऽपि निघण्टुः कोशो वा समग्रमर्थजातं दद्यात्। दिग्दर्शनमात्रा प्रवृत्तिः। पाणिनिना कृत्तद्धितप्रत्ययाः कालत्रयव्यवहारसिद्ध्ये प्रवर्तिताः। कृत्तद्धितयन्त्रेषु नवनवाः कोटिशः शब्दाः निष्क्रामन्ति। तेषु कतिचिदेव व्यवहारे पदं लभन्ते। तेषां शब्दानां अर्थाः व्यवहर्तृभिः सृज्यन्ते। तेऽपि कोटिशः। तेषामिदन्ता-स्वरूपदर्शनमेव ग्रन्थस्यैतस्य लक्ष्यम्।

संस्कृतभाषापरिचयाय यतमानं माणवकमन्यं वा इयं धातुमाला उपकुरुते साहाय्यदानेन।

प्रायः अकारान्ताः धातवः पठिताः। कचित् ''ओहाक् त्यागे'' ''डुकृञ् करणे'' ''चमु भक्षणे'' ञि भी भये'' ''णिदि निन्दायां'' ''त्रैङ् पालने'' ''दुधाञ् धारणपोषणयोः'' इत्यादिस्थलेषु अङ्गत्वेन अघटमानान्यक्षराणि पदं लभन्ते शब्दनिष्पत्तौ विशिष्टं योगं ख्यापयितुम्। ''हा त्यागे'' ''कृ करणे'' इत्येवालं शिष्यदृष्टौ। परं नियमविवरणे अल्पाक्षरयोजनं पाणिनिः सर्वत्र उपादत्ते। सततं अत्र युक्ताः तां लघ्वीं अत्युपकारिणीं सरणिं अभिनन्दन्ति।

मङ्गलेन भूधातुना एध धातुना च प्रभवन् मङ्गलेन सान्त्व धातुना पूर्णः। मङ्गलानि भवन्तु॥

# தாதுமாலா

## பொருளமைப்பு முறை

ஸம்ஸ்கிருதஸ்ரீ பத்திரிகை எளிய முறையில் ஸம்ஸ்கிருத மொழிப் பயிற்சி தரும் நோக்குடன் 1977ம் ஆண்டில் விஜயதசமியன்று துவக்கப்பெற்றது. அதில் வெளிவந்த பாடங்களைச் சீர்படுத்தி ஸம்ஸ்கிருதஸ்ரீ பாடமாலா 1 - 6 பாகங்களை வெளியிட்டு அவற்றின் மூலம் பயிற்சி தரப்படுகிறது. ஆண்டிற்கு இருமுறை ஜனவரியிலும் ஜுலையிலும் தேர்வுகள் நடத்தப் பெறுகின்றன. பயிற்சி பெறுபவர்களுக்கென சப்தமஞ்சரி வெளியிடப்பட்டுள்ளது. தாதுக்களின் பல்வேறு வினைமுற்று வடிவங்களில் பயிற்சி பெற தாதுமாலா இப்போது வெளியிடப் பெறுகிறது.

ஸம்ஸ்கிருதஸ்ரீயை வெளியிடுகிற ஸம்ஸ்கிருத வித்யா ஸமிதி 1965 - 1972ல் சாஸ்திரரத்நாகர குலபதி ஸ்ரீS. ராமஸுப்பா சாஸ்திரி அவர்களின் மேற்பார்வையில் ஒரு நிபுணர் குழு அமைத்து கிருதந்த ரூபமாலா என்ற நூலின் 5 பாகங்களில் பாணினி தந்த தாது பாடத்தில் கண்ட இரண்டாயிரத்திற்கும் மேற்பட்ட தாதுக்களின் கிருதந்த வினை முற்று வடிவங்களை மிகவும் சிறப்பாக நியமங்களுடன் தொகுத்து வெளியிட்டது. அதனை ஆதாரமாகக் கொண்டே தாதுக்களின் ரூபங்களைத் தபால் மூலம் பயில்பவருக்குத் துணை நூலாகத் தொகுக்க ஸமிதி முன் வந்தது. மிகவும் அதிகமாகப் பழக்கத்தில் உள்ள 300 தாதுக்களின் ரூபங்களை மட்டும் முதலில் தொகுத்துத் தருகிறோம்.

தாதுக்கள் 10 விகரணங்களில் பிரிக்கப்பட்டுள்ளன. ஒவ்வொரு விகரணமும் சிறிதளவில் தனித்தனி வடிவமைப்பில் மாறுபடும். சப் ச என்ற விகரண தாதுக்கள் "அ" என்ற விகரண விகுதி கொண்டவை. ச்யன் விகரணம் 'ய' என்ற விகரண விகுதி கொண்டது. அமைப்பில் ஒரே சீராக இருப்பதாலும் அதிக தாதுக்கள் இவ்விகரணங்களில் வழக்கில் உள்ளதாலும் தாது மாலாவில் இவை முதலில் இடம் பெறுகின்றன. 'லுக்' விகரணத்தில் விகரண விகுதி இல்லை. 'ச்லு' விகரணத்தில் விகரண விகுதியும் இல்லை. தாதுவின் எழுத்தும் இரட்டித்து

விடுகிறது. ச்நு விகரணத்தில் 'நு', ச்நம் விகரணத்தில் 'ந' உ விகரணத்தில் 'உ' ச்நா விகரணத்தில் 'நா' ணிஜ் விகரணத்தில் 'அய' என விகரண அடையாளமான விகுதியாகச் சேர்க்கப்படுகின்றன.

ஒவ்வொரு தாது (வினைச்சொல்)வும் 10 லகாரங்களில் பல நிலைகளைத் தெரிவிக்கின்றன. பொதுவாக நிகழ்காலம் கடந்த காலம் வருங்கால்ம் என்று கால மாறுபாட்டையும் கட்டளை முதலியவற்றையும் அவை காட்டுகின்றன.

லட் - நிகழ்காலத்தை குறிப்பது. (Present Tense)

லுங் - கடந்த காலத்தைக் குறிப்பது (Past tense - AORIST)

லங் - கடந்த காலத்தில் நேற்றோ அதற்கு முன்னரோ நிகழ்ந்ததைக் குறிப்பது. இன்று நடந்ததைக் குறிப்பிடாது. (Imperfect)

லிட் - கடந்ததில் - நேரில் காணாத வரலாற்று நிகழ்ச்சிகள், இருந்தானும் இருந்தேனும் இருந்தாயாம் என்றவாறு குறிக்கப் பெறுபவை, மறைக்க விரும்புபவை, வெளி உலக உணர்வற்ற நிலையில் தானே செய்தவை இவற்றைக் குறிப்பது (Perfect)

ல்ருட் - வருங்காலத்தைக் குறிப்பது. நிகழக்கூடும் என எதிர்பார்ப்பதையும் இது குறிக்கும். (Future tense)

லுட் - வருங்காலத்தில் எப்போதாவது கட்டாயம் நிகழக்கூடியதைக் குறிப்பது. (First Future tense)

இவை காலத்தைக் குறிப்பிடுகிற ஆறு லகாரங்கள்.

லோட் - கட்டளை, அவசியப்பணியில் தூண்டுவது, அனுமதி, வேண்டுகோள், இப்பொருள்களில் பயன்படுவது. இவற்றை அவசியம் மறுசிந்தனையின்றிச் செய்யத் தூண்டுதல் உண்டு (Imperative word)

விதிலிங் - கட்டளை முதலியவற்றை சிந்தித்துச் செயல்படுகிற பாங்கை இது சொல்லும். செய்யவோ செய்யாதிருக்கவோ சுதந்திரமிருக்கும். (Potential)

ஆசீர்லிங் - கட்டளை முதலியவற்றைத் தனது எதிர்பார்ப்பாகக் கருதுவதை இது குறிக்கும். ஆசி வழங்கப் பெரிதும் பயன்பெறும். (Benedictive)

ல்ருங் - நிகழாததொன்றை ஊகித்து இவ்வாறு நேர்ந்தால் அவ்வாறு நேரும் என்ற கருத்தைக் குறிப்பது (Conditional mood)

இவற்றில் லட் லங் லோட் விதிலிங் என்ற நான்கில் விகரண பிரத்யயம் தெரியும். இவற்றை ஸார்வதாதுகம் என்பர். லிட் லுட் ல்ருட் ல்ருங் ஆசீர்லிங், லுங் என்ற ஆறிலும் விகரண ப்ரத்யயம் மறையும். இவற்றை ஆர்த்ததாதுகம் என்பர். தாதுமாலையில் இப்பிரிவின் அடிப்படையில் லகாரங்கள் வரிசைப்படுத்தப்பட்டுள்ளன.

லகாரங்களை மூன்று புருஷன்களாக மூன்று வசனங்களாகப் பிரித்துள்ளனர். அவன் அவள் அது இவன் இவள் இது செய்வதைக் குறிப்பது பிரதம புருஷன். படர்க்கை (Third person). நீ செய்வதைக் குறிப்பது மத்யம புருஷன். முன்னிலை (second person). நான் செய்வதைக் குறிப்பது உத்தமபுருஷன் - தன்மை (first person). ஸுபந்தவசனங்களைப் போல் தாது ரூபங்களுக்கும் மூன்று வசனங்களும் உண்டு. ஏகவசனம் ஒருமை - singular, த்விவசனம் இருமை - dual, பஹுவசனம் பன்மை - plural.

தாதுக்களில் லிங்க வேற்றுமை இல்லை. ஆனால் புருஷ - வசன வேற்றுமை உண்டு. கர்தா ஏகவசனத்திலிருந்தால் தாதுரூபமும் ஏக்வசனத்தில் தான் வரும்.

இந்த லகாரங்கள் கர்தரி - கர்மணி என்ற இரு ப்ரயோகங்களையும் பெறும். கர்தரி ப்ரயோகத்தில் கர்தா (எழுவாய்) முதல் வேற்றுமையிலும், கர்ம (செயப்படுபொருள்) இரண்டாம் வேற்றுமையிலுமிருக்கும். இப்படி ஸகர்மக தாதுவின் ப்ரயோகம் (செய்வினை குன்றாவினை, Transitive verb) அமையும். கர்மணி ப்ரயோகத்தில் கர்தா (கரணமாக) மூன்றாம் வேற்றுமையிலும் கர்ம எழுவாயாக முதல் வேற்றுமையிலும் வரும். அகர்மக (செய்வினை குன்றிய வினை Intransitive verb) தாதுக்களுக்கு கர்மணி

ப்ரயோகமில்லை. (अहं पाठान् पठामि । मया पाठाः पठ्यन्ते ।) வினைச் சொற்கள் எழுவாயைத் தழுவுவதால் पठामि - पठ्यन्ते என வசனங்கள் மாறுபடுகின்றன. தாதுவின் அங்கத்துடன் யக் ப்ரத்யயம் சேர்கிறது. அகர்மக தாதுக்களுடனும் யக் ப்ரத்யயம் சேர்ந்து भावे பிரயோகமாகிறது. सिंहो गर्जति। सिंहेन गर्ज्यते। எனकर्तरि-भावे ப்ரயோகங்கள் அமைகின்றன.

லகாரங்களின் ப்ரத்யயச் சேர்க்கையையும் வகைகளையும் 10—11 பக்கங்களில் காணலாம். மூன்று புருஷன்களிலும் மூன்று வசனங்களிலுமாக ஒவ்வொரு லகாரமும் ஒன்பது ப்ரத்யயங்களுடன். கூடுகின்றன. அதற்கான ஸூத்ரம் பரஸ்மைபதத்திற்கும் ஆத்மநேபதத்திற்குமாக (9 + 9) 18 வ்டிவங்களைத் தருகிறது. அதன் ஸூத்ரம் பின்வருமாறு.

तिप् तस् झि, सिप् थस् थ, मिब् वस् मस्,
त आतां झ, थास् आथां ध्वं, इड् वहि महिङ्।

அதில் இட் ஆகி மறைகிற எழுத்துக்களை நீக்கி மாறுபாட்டைவதையையும் சேர்த்தால் பரஸ்மை - ஆத்மநே பதங்களின் (9 + 9) ப்ரத்யயங்களை இவ்வாறு கொள்ளலாம்.

ति तः अन्ति। सि थः थ। मि वः मः।
त आतां अन्त। थाः आथां ध्वं। इ वहि महि।

ति தொடங்கி महिङ्ல் உள்ள ङ् உடன் முடிவதால் இந்தப் ப்ரத்யயங்களை तिङ् என்று ப்ரத்யாஹார முறையில் கூறுவர். இந்த திங் ப்ரத்யயங்களே பல்வேறு மாறுபாடுகளுக்கு உட்படுவதை 10—11 பக்கத்தில் காணலாம்.

விகரண - லகார ப்ரத்யயங்களைச் சேர்த்து உருவாவதே தாதுரூபம். பரஸ்மைபதியும் ஆத்மநேபதியுமான தாது இவ்வாறு பத்து லகாரங்களில் 90 ரூபங்களைப் பெறுகின்றது. சில தாதுக்கள் சில வசனங்களில் 2-3-4 ரூபங்களைப் பெறும். லகாரமே 2-3 விதமாக அமையும். குழப்பமின்றித் தெளிவாக அறியவே இத்தொகுப்பு.

ஒரே சீராக அமைகிற தாதுக்களில் அந்தந்த கணத்தைச் சார்ந்த முதல் 2-3 தாதுக்களுக்கு அனைத்து ரூபங்களும் தரப்படுகின்றன. பின்னர் கடினமான லகாரத்தின் ஒன்பது ரூபங்களையும் தந்து எளிதில் ஊகிக்கத்தக்கவற்றின் ப்ரதம புருஷ ஏகவசனம் மட்டும் தரப்படுகிறது. நூல் விரிவைப் பற்றிய அச்சமும் பழக்கத்தால் எளிதில் ஊகிக்கும் திறமை வளர்ப்பதும் மனத்தில் கொண்டு இந்த அமைப்பு ஏற்கப்பட்டுள்ளது.

**கிருத் ப்ரத்யயங்கள் பற்றி** :- *130* கிருத் ப்ரத்யயங்கள் உள்ளன. அவை அனைத்தும் வழக்கில் மிகக்குறைவு. அவை எல்லா தாதுக்களிலும் வராதிருப்பதும் உண்டு. அவற்றில் सन् கிரியாபதமாகவும் நாமசப்தமாகவும் வழங்கும். (बुभूषति- बुभूषा)

சில அவ்யயமாக வரும். (क्त्वा - भूत्वा, ल्यप्-संभूय तुमुन्-भवितुं)

1. क्त्वा - त्वा - வினை எச்சம் past participate. कृत्वा செய்து भूत्वा ஆகி

2. ल्यप् - य உபஸர்கத்துடன் கூடிய தாதுவுடன் கூடிய त्वा என்பது य ஆக மாறும். अधिकृत्य தொடங்கி, संभूय கூடி. क्त्वाவும் ल्यप्ம் செயல் நிறைவைக் குறிக்கும்.

3. तुमुन् - செயல் செய்வதற்கு என்பதைக் குறிப்பிட உதவும். कर्तुं செய்ய. भवितुं ஆக. infinitive of purpose இது செயல் தொடங்க விருப்பத்தைக் குறிக்கும். क्त्वान्तं ल्यबन्तं तुमुन्नन्तं என இவற்றைக் குறிப்பிடுவர்.

ஸுபந்தச் (பெயர்) சொற்களாக வருபவை சில.

4. क्तान्तं - त - செய்யப்பட்ட என்ற பொருளில் வருகிற வாய்ப்பாட்டுப் பெயரெச்சம். कृत செய்யப்பட்ட. कृतः कृता कृतं என மூன்று லகாரங்களிலும் வரும். कृतं என நபும்ஸகத்தில் भावे ப்ரயோகமாக வரும். Past passive participle

5. क्तवत्वन्तं - तवत् - செய்தவன் என்ற பொருளில் வருகிற வாய்ப்பாட்டு பெயரெச்சம். Past active participle. कृतवत्

செய்தவனுக. हतवान् அழித்தவனுக. 3 லிங்கங்களிலும் வரும் कृतवान् कृतवती कृतवत् என.

6. शतृ - अत् இது தொடர் நிகழ்காலப் பெயரெச்சம். Present participle. பரஸ்மைபத தாதுக்களில் மட்டும் பொருந்தும். कुर्वन् செய்து கொண்டிருக்கிறவனுக. गच्छन् சென்று கொண்டிருப்பவனுக. कुर्वन् कुर्वन्ती कुर्वत् என மூன்று லிங்கங்களில்.

7. शानच् - आन - தொடர் நிகழ்காலப் பெயரெச்சம் Present participle ஆத்மநேபத தாதுக்களில் மட்டும். कुर्वाणः செய்து கொண்டிருக்கிற यतमानः முயன்று கொண்டிருக்கிற. कुर्वाणः कुर्वाणा कुर्वाणं என.

8. सन् - விழைவுப் பொருளில் வருகிற பெயரெச்சம். चिकीर्षन् - (பரஸ்மைபதத்தில்) செய்ய விரும்புகிற चिकीर्षमाणः (ஆத்மநே பதத்தில்) செய்ய விரும்புகிற. चिकीर्षन् चिकीर्षती चिकीर्षत्

9. ल्युट् - अन. தொழிற்பெயர் Gerund. करणं செய்கை செயல் जननं பிறப்பு. (நபும்ஸகலிங்கம்)

10. ण्वुल् - अक. தொழிற்பெயர் - Verbal nown. कारकः செய்பவன். कारकः कारिका कारकम्।

11. तव्य - तव्य. வேண்டும் தகும் என்ற செயலாற்றுதலை உணர்த்துகிற விசேஷணச் சொல். Potential participle. कर्तव्यं செய்ய வேண்டியது. செய்யத்தக்கது. कर्तव्यः कर्तव्या कर्तव्यं।

12. ण्यत् - य। तव्य போன்றது. कार्यं செய்யத்தக்கது, செய்ய வேண்டியது. कार्यः कार्या कार्यं।

13. अनीयर्ट् - अनीय तव्य போன்றது. करणीयं செய்யத்தக்கது செய்ய வேண்டியது. करणीयः करणीया करणीयं।

14. तृच् - तृ வினையால் அணையும் பெயர். कर्ता செய்பவன்.

15. ஸந்நந்தத்தில் செய்ய விருப்பம் என்பதைக் குறிப்பது. बुभूषा ஆக விருப்பம், चिकीर्षा செய்ய விருப்பம் என்ற ஸந்நந்த சப்தங்கள்.

16. ஸந்நந்தத்திலேயே செய்ய விரும்புவனைக் குறிப்பது चिकीर्षुः बुभूषुः என்றவாறு (செய்ய விரும்புகின்ற- ஆக விரும்புகின்ற என்ற) விசேஷணச் சொற்கள்.

17. क्तिन् - तिः செயலைக் குறிப்பிடுவது कृतिः செயல் मतिः அறிவு. இது ஸ்திரீ லிங்கத்தில் மட்டும்.

18. घञ् अः இதுவும் செயலைக் குறிப்பிடுவதே. भवः இருக்கை शापः சாபம் ऊहः ஊஹம்.

இந்த கிருத் ப்ரத்யங்கள் சேர்ந்த தாது ரூபங்களும் லகார ரூபத்தை அடுத்து இடம் பெறுகின்றன.

இவற்றை அடுத்து உபஸர்க இணைப்பால் பொருள் மாறுபடுகிற தாதுக்களின் உபஸர்கம் இணைந்த வடிவங்களும் தரப்படுகின்றன.

மங்களமான भू தாதுவில் தொடங்கி மங்களமான सान्त्व தாதுவுடன் நிறைவுறுகிறது.

## श्री गुरुभ्यो नमः

गुरवे सर्वलोकानां भिषजे भवरोगिणाम् ।
निधये सर्वविद्यानां दक्षिणामूर्तये नमः ॥

अकारादि-क्षकारान्त-वर्णावयवशालिनी ।
वीणापुस्तकहस्ताऽव्यात् प्रणो देवी सरस्वती ॥

या वर्णपदवाक्यार्थगद्यपद्यस्वरूपिणी ।
वाचि नर्तयतु क्षिप्रं मेधां देवी सरस्वती ॥

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥

भजे गुरुं तं, गाहेऽब्धिं धातूनां, कतिचिल्लभे ।
मुक्ताः, तद्ग्रथितां मालां धरन्तु हृदि साधवः ॥

# धातुमाला

## १. शब्विकरणम् - भ्वादयो धातवः

### १. भू सत्तायाम् - இருக்க

**(अक - सेट् - प)**

**लट्** - भवति भवतः भवन्ति । भवसि भवथः भवथ । भवामि भवावः भवामः ।

**लङ्** - अभवत् अभवताम् अभवन् । अभवः अभवतम् अभवत । अभवम् अभवाव अभवाम ।

**लोट्** - भवतु-भवतात् भवताम् भवन्तु । भव-भवतात् भवतम् भवत । भवानि भवाव भवाम ।

**विधिलिङ्** - भवेत् भवेताम् भवेयुः । भवेः भवेतम् भवेत । भवेयम् भवेव भवेम ।

**लिट्** - बभूव बभूवतुः बभूवुः । बभूविथ बभूवथुः बभूव । बभूव बभूविव बभूविम ।

**लुट्** - भविता भवितारौ भवितारः । भवितासि भवितास्थः भवितास्थ । भवितास्मि भवितास्वः भवितास्मः ।

**लृट्** - भविष्यति भविष्यतः भविष्यन्ति । भविष्यसि भविष्यथः भविष्यथ । भविष्यामि भविष्यावः भविष्यामः ।

**लृङ्** - अभविष्यत् अभविष्यताम् अभविष्यन् । अभविष्यः अभविष्यतम् अभविष्यत । अभविष्यम् अभविष्याव अभविष्याम ।

**आशीर्लिङ्** - भूयात् भूयास्ताम् भूयासुः । भूयाः भूयास्तम् भूयास्त । भूयासम् भूयास्व भूयास्म ।

**लुङ्** - अभूत् अभूताम् अभूवन् । अभूः अभूतम् अभूत । अभूवम् अभूव अभूम ।

- भूयते, भावयति, बुभूषति,

- भूत्वा, संभूय, भवितुं, भूत, भूतवत्, भवत्, बुभूषत्, भवनं, भावकः, भवितव्य, भाव्य, भवनीय, भवितृ, बुभूषा, बुभूषुः ।

- भूष्णुः, भविष्णुः, प्रभुः, विभुः, भूतिः, विभूतिः,

- अनुभवति *அனுபவிக்கிறான்*, अभिभवति *அடக்குகிறான், மீறுகிறான்*, उद्भवति - *உண்டாகிறான்*, पराभवति - *வெல்கிறான்*, परिभवति - *தோற்கிறான்*, प्रभवति - *தோன்றுகிறான். பலவாக ஆகிறான். வளர்கிறான், ஆள்கிறான்.* विभावयति *சிந்திக்கிறான்*, संभवति - *தோன்றுகிறான். இணையாகிறான்.*

## २. एध वृद्धौ வளர

### (अक - सेट् - आ)

**लट्** - एधते एधेते एधन्ते । एधसे एधेथे एधध्वे । एधे एधावहे एधामहे ।

**लङ्** - ऐधत ऐधेताम् ऐधन्त । ऐधथाः ऐधेथाम् ऐधध्वम् । ऐधे ऐधावहि ऐधामहि ।

**लोट्** - एधताम् एधेताम् एधन्ताम् । एधस्व एधेथाम् एधध्वम् । एधै एधावहै एधामहै ।

**विधिलिङ्** - एधेत एधेयाताम् एधेरन् । एधेथाः एधेयाथाम् एधेध्वम् । एधेय एधेवहि एधेमहि ।

**लिट्** - एधाञ्चक्रे एधाञ्चक्राते एधाञ्चक्रिरे। एधाञ्चकृषे एधाञ्चक्राथे एधाञ्चकृढ्वे। एधाञ्चक्रे एधाञ्चकृवहे एधाञ्चकृमहे। (अथवा) (प) एधामास एधामासतुः एधामासुः। एधामासिथ एधामासथुः एधामास। एधामास एधामासिव एधामासिम।(अथवा) एधाम्बभूव एधाम्बभूवतुः एधाम्बभूवुः। एधाम्बभूविथ एधाम्बभूवथुः एधाम्बभूव। एधाम्बभूव एधाम्बभूविव एधाम्बभूविम।

**लुट्** - एधिता एधितारौ एधितारः। एधितासे एधितासाथे एधिताध्वे। एधिताहे एधितास्वहे एधितास्महे।

**लृट्** - एधिष्यते एधिष्येते एधिष्यन्ते। एधिष्यसे एधिष्येथे एधिष्यध्वे। एधिष्ये एधिष्यावहे एधिष्यामहे।

**लृङ्** - ऐधिष्यत ऐधिष्येताम् ऐधिष्यन्त। ऐधिष्यथाः ऐधिष्येथाम् ऐधिष्यध्वम्। ऐधिष्ये ऐधिष्यावहि ऐधिष्यामहि।

**आशीर्लिङ्** - एधिषीष्ट एधिषीयास्ताम् एधिषीरन्। एधिषीष्ठाः एधिषीयास्थाम् एधिषीध्वम्। एधिषीय एधिषीवहि एधिषीमहि।

**लुङ्** - ऐधिष्ट ऐधिषाताम् ऐधिषत। ऐधिष्ठाः ऐधिषाथाम् ऐधिढ्वं-ध्वं। ऐधिषि ऐधिष्वहि ऐधिष्महि।

- एध्यते, एधयति-ते, एदिधिषते

- एधित्वा, समेध्य, एधितुं, एधित, एधितवत्, एधमान, एदिधिषमाण, एधनं, एधकः, एधितव्य, एध्य, एधनीय, एधितृ एदिधिषा, एदिधिषुः,

## ३. अट गतौ செல்ல

### (सक सेट् प)

**लट्** - अटति अटतः अटन्ति। अटसि अटथः अटथ। अटामि अटावः अटामः।

**लङ्** - आटत् आटतां आटन्। आटः आटतं आटत। आटं आटाव आटाम।

**लोट्** - अटतु - अटतात् अटतां अटन्तु। अट - अटतात् अटतं अटत। अटानि अटाव अटाम।

**विधिलिङ्** - अटेत् अटेतां अटेयुः। अटेः अटेतं अटेत। अटेयं अटेव अटेम।

**लिट्** - आट आटतुः आटुः। आटिथ आटथुः आट। आट आटिव आटिम।

**लुट्** - अटिता अटितारौ अटितारः। अटितासि अटितास्थः अटितास्थ। अटितास्मि अटितास्वः अटितास्मः।

**लृट्** - अटिष्यति अटिष्यतः अटिष्यन्ति। अटिष्यसि अटिष्यथः अटिष्यथ। अटिष्यामि अटिष्यावः अटिष्यामः।

**लृङ्** - आटिष्यत् आटिष्यतां आटिष्यन्। आटिष्यः आटिष्यतं आटिष्यत। आटिष्यं आटिष्याव आटिष्याम।

**आशीर्लिङ्** - अट्यात् अट्यास्तां अट्यासुः। अट्याः अट्यास्तं अट्यास्त। अट्यासं अट्यास्व अट्यास्म।

**लुङ्** - आटीत् आटिष्टां आटिषुः। आटीः आटिष्टं आटिष्ट। आटिषं आटिष्व आटिष्म।

- अट्यते आटयति अटिटिषति

- अटित्वा अटितुं पर्यटच अटित अटितवत् अटत् अटिटिषत् अटनं आटकः अटितव्य आटच अटनीय अटितृ अटिटिषा अटिटिषुः

## ४. अत सातत्यगमने தொடர்ந்து செல்ல

(सक - सेट् -प)

**लट्** - अतति अततः अतन्ति। अतसि अतथः अतथ। अतामि अतावः अतामः।

**लङ्** - आतत् आतताम् आतन्। आतः आततम् आतत। आतम् आताव आताम।

**लोट्** - अततु-अततात् अततां अतन्तु। अत-अततात् अततम् अतत। अतानि अताव अताम।

**वि.लि.** - अतेत् अतेताम् अतेयुः। अतेः अतेतम् अतेत। अतेयम् अतेव अतेम।

**लिट्** - आत आततुः आतुः। आतिथ आतथुः आत। आत आतिव आतिम।

**लुट्** - अतिता अतितारौ अतितारः। अतितासि अतितास्थः अतितास्थः। अतितास्मि अतितास्वः अतितास्मः।

**लृट्** - अतिष्यति अतिष्यतः अतिष्यन्ति। अतिष्यसि अतिष्यथः अतिष्यथ। अतिष्यामि अतिष्यावः अतिष्यामः।

**लृङ्** - आतिष्यत् आतिष्यताम् आतिष्यन्। आतिष्यः आतिष्यतम् आतिष्यत। आतिष्यम् आतिष्याव आतिष्याम।

**आ.लि.** - अत्यात् अत्यास्ताम् अत्यासुः। अत्याः अत्यास्तम् अत्यास्त। अत्यासम् अत्यास्व अत्यास्म।

**लुङ्** - आतीत् आतिष्टाम् आतिषुः। आतीः आतिष्टम् आतिष्ट। आतिषम् आतिष्व आतिष्म।

- अत्यते आतयति अतितिषति

- अतित्वा अन्वत्य अतितुं अतित अतितवत् अतत् अतितिषत् अतनं आतकः अतितव्य अत्य अतनीय अतितृ अतितिषा अतितिषुः

- पदातिः अतिथिः आत्मा

## ५. अर्च पूजायां வழிபட
### (सक - सेट् - प)

**लट्** - अर्चति अर्चतः अर्चन्ति । अर्चसि अर्चथः अर्चथ । अर्चामि अर्चावः अर्चामः ।

**लङ्** - आर्चत् आर्चताम् आर्चन् । आर्चः आर्चतम् आर्चत । आर्चम् आर्चाव आर्चाम ।

**लोट्** - अर्चतु-अर्चतात् अर्चताम् अर्चन्तु । अर्च-अर्चतात् अर्चतम् अर्चत । अर्चानि अर्चाव अर्चाम ।

**वि.लि.** - अर्चेत् अर्चेताम् अर्चेयुः । अर्चेः अर्चेतम् अर्चेत । अर्चेयम् अर्चेव अर्चेम ।

**लिट्** - आनर्च आनर्चतुः आनर्चुः । आनर्चिथ आनर्चथुः आनर्च । आनर्च आनर्चिव आनर्चिम ।

**लुट्** - अर्चिता अर्चितारौ अर्चितारः । अर्चितासि अर्चितास्थः अर्चितास्थ । अर्चितास्मि अर्चितास्वः अर्चितास्मः ।

**लृट्** - अर्चिष्यति अर्चिष्यतः अर्चिष्यन्ति । अर्चिष्यसि अर्चिष्यथः अर्चिष्यथ । अर्चिष्यामि अर्चिष्यावः अर्चिष्यामः ।

**लृङ्** - आर्चिष्यत् आर्चिष्यताम् आर्चिष्यन् । आर्चिष्यः आर्चिष्यतम् आर्चिष्यत । आर्चिष्यम् आर्चिष्याव आर्चिष्याम ।

**आ.लि.** अर्च्यात् अर्च्यास्ताम् अर्च्यासुः । अर्च्याः अर्च्यास्तम् अर्च्यास्त । अर्च्यासम् अर्च्यास्व अर्च्यास्म ।

**लुङ्** - आर्चीत् आर्चिष्टाम् आर्चिषुः । आर्चीः आर्चिष्टम् आर्चिष्ट । आर्चिषम् आर्चिष्व आर्चिष्म ।

- अर्च्यते अर्चयति अर्चिचिषति

- अर्चित्वा समर्च्य अर्चितुं अर्चित अर्चितवत् अर्चत् अर्चिचिषत् अर्चनं अर्चकः अर्चितव्यं अर्च्य अर्चनीय अर्चितृ अर्चिचिषा अर्चिचिषुः

- अर्कः समर्चा

## ६. अर्ह पूजायाम् வழிபட

**(सक - सेट् - प)**

- अर्हति, आर्हत् अर्हतु, अर्हेत्, आनर्ह, अर्हिता, अर्हिष्यति, आर्हिष्यत्, अर्ह्यात्, आर्हीत्

- अर्ह्यते अर्हयति अर्जिहिषति

- अर्हित्वा समर्ह्य अर्हितुं अर्हित अर्हितवत् अर्हत् अर्जिहिषत् अर्हणं अर्हकः अर्हितव्य अर्ह्य अर्हणीय अर्हितृ अर्जिहिषा अर्जिहिषुः

- अर्हति *மதிக்கப்பெறுகிறான்.* अर्हति *தகுதி பெறுகிறான் (லட்டில் மட்டும்)* अर्घः *மதிப்பு.*

## ७. अव रक्षणे காப்பாற்ற

**(सक - सेट् - पर)**

- अव-रक्षणे गतौ कान्तौ प्रीतौ तृप्तौ द्युतौ श्रुतौ प्राप्तौ श्लेषे अर्थने अवगमे क्रियायां इच्छायां हिंसायां आदाने भागे वृद्धौ च ।

अटति (३) वत्। अवति आवत् अवतु अवेत् आव अविता अविष्यति आविष्यत् अव्यात् आवीत्

- अव्यते अवयति अविविषति

- अवित्वा समव्य अवितुं अवित अवितवत् अवत् अविविषत् अवनं आवकः अवितव्य आव्य अवनीय अवितृ अविविषा अविविषुः

- अवनी अवनिः பூமி ओतुः பூனை.

## ८. ईक्ष दर्शने பார்க்க

### (सक सेट् आ)

**लट्** - ईक्षते ईक्षेते ईक्षन्ते। ईक्षसे ईक्षेथे ईक्षध्वे। ईक्षे ईक्षावहे ईक्षामहे।

**लङ्** - ऐक्षत ऐक्षेताम् ऐक्षन्त। ऐक्षथाः ऐक्षेथाम् ऐक्षध्वम्। ऐक्षे ऐक्षावहि ऐक्षामहि।

**लोट्** - ईक्षताम् ईक्षेताम् ईक्षन्ताम्। ईक्षस्व ईक्षेथाम् ईक्षध्वम्। ईक्षै ईक्षावहै ईक्षामहै।

**वि.लि.** - ईक्षेत ईक्षेयाताम् ईक्षेरन्। ईक्षेथाः ईक्षेयाथाम् ईक्षेध्वम्। ईक्षेय ईक्षेवहि ईक्षेमहि।

**लिट्** - ईक्षाञ्चक्रे ईक्षाञ्चक्राते ईक्षाञ्चक्रिरे। ईक्षाञ्चकृषे ईक्षाञ्चक्राथे ईक्षाञ्चकृढ्वे। ईक्षाञ्चक्रे ईक्षाञ्चकृवहे ईक्षाञ्चकृमहे।

**लुट्** - ईक्षिता ईक्षितारौ ईक्षितारः। ईक्षितासे ईक्षितासाथे ईक्षिताध्वे। ईक्षिताहे ईक्षितास्वहे ईक्षितास्महे।

**लृट्** - ईक्षिष्यते ईक्षिष्येते ईक्षिष्यन्ते। ईक्षिष्यसे ईक्षिष्येथे ईक्षिष्यध्वे। ईक्षिष्ये ईक्षिष्यावहे ईक्षिष्यामहे।

लृङ् - ऐक्षिष्यत ऐक्षिष्येताम् ऐक्षिष्यन्त । ऐक्षिष्यथाः ऐक्षिष्येथाम् ऐक्षिष्यध्वम् । ऐक्षिष्ये ऐक्षिष्यावहि ऐक्षिष्यामहि ।

आ.लि. - ईक्षिषीष्ट ईक्षिषीयास्ताम् ईक्षिषीरन् । ईक्षिषीष्ठाः ईक्षिषीयास्थाम् ईक्षिषीध्वम् । ईक्षिषीय ईक्षिषीवहि ईक्षिषीमहि ।

लुङ् - ऐक्षिष्ट ऐक्षिषाताम् ऐक्षिषत । ऐक्षिष्ठाः ऐक्षिषाथाम् ऐक्षिड्ढ्वम्-ध्वम् । ऐक्षिषि ऐक्षिष्वहि ऐक्षिष्महि ।

- ईक्ष्यते ईक्षयते ईचिक्षिषते

- ईक्षित्वा प्रेक्ष्य ईक्षितुं ईक्षित ईक्षितवत् ईक्षमाण ईचिक्षिषमाण ईक्षणं ईक्षकः ईक्षितव्य ईक्ष्य ईक्षणीय ईक्षितृ ईचिक्षिषा ईचिक्षिषुः

- अधीक्षते *சந்தேகத்துடன் நோக்குகிறான்.* अपेक्षते - *எதிர்பார்க்கிறான்.* अन्वीक्षते - *தேடுகிறான், ஆராய்கிறான்.* अभिवीक्षते *உட்புகுந்து பார்க்கிறான்.* अवेक्षते *குறிபார்க்கிறான்.* उदीक्षते प्रेक्षते *உற்றுப் பார்க்கிறான். நிமிர்ந்து பார்க்கிறான்,* उत्प्रेक्षते *எதிர்பார்க்கிறான் ஊஹிக்கிறான்.* उपेक्षते समुपेक्षते *தவிர்க்க விரும்புகிறான்.* परीक्षते *சோதித்துப் பார்க்கிறான்.* प्रतीक्षते *எதிர்பார்க்கிறான்.* समवेक्षते *சுற்றிப் பார்க்கிறான் ஆய்வு செய்கிறான்.*

## ९. ईर्ष्य ईर्ष्यायां அசூயைப்பட

### (अक सेट् प)

लट् - ईर्ष्यति ईर्ष्यतः ईर्ष्यन्ति । ईर्ष्यसि ईर्ष्यथः ईर्ष्यथ । ईर्ष्यामि ईर्ष्यावः ईर्ष्यामः ।

लङ् - ऐर्ष्यत् ऐर्ष्यताम् ऐर्ष्यन् । ऐर्ष्यः ऐर्ष्यतम् ऐर्ष्यत । ऐर्ष्यम् ऐर्ष्याव ऐर्ष्याम ।

लोट् - ईर्ष्यतु ईर्ष्यताम् ईर्ष्यन्तु । ईर्ष्य ईर्ष्यतम् ईर्ष्यत । ईर्ष्याणि ईर्ष्याव ईर्ष्याम ।

वि.लि. - ईर्ष्येत् ईर्ष्येताम् ईर्ष्येयुः । ईर्ष्येः ईर्ष्येतम् ईर्ष्येत । ईर्ष्येयम् ईर्ष्येव ईर्ष्येम ।

लिट् - ईर्ष्याञ्चकार ईर्ष्याञ्चक्रतुः ईर्ष्याञ्चक्रुः । ईर्ष्याञ्चकर्थ ईर्ष्यांचक्रथुः ईर्ष्यांचक्र । ईर्ष्याञ्चकार ईर्ष्यांचकृव ईर्ष्यांचकृम ।

लुट् - ईर्ष्यिता ईर्ष्यितारौ ईर्ष्यितारः । ईर्ष्यितासि ईर्ष्यितास्थः ईर्ष्यितास्थ । ईर्ष्यितास्मि ईर्ष्यितास्वः ईर्ष्यितास्मः ।

लृट् - ईर्ष्यिष्यति ईर्ष्यिष्यतः ईर्ष्यिष्यन्ति । ईर्ष्यिष्यसि ईर्ष्यिष्यथः ईर्ष्यिष्यथ । ईर्ष्यिष्यामि ईर्ष्यिष्यावः ईर्ष्यिष्यामः ।

लृङ् - ऐर्ष्यिष्यत् ऐर्ष्यिष्यताम् ऐर्ष्यिष्यन् । ऐर्ष्यिष्यः ऐर्ष्यिष्यतम् ऐर्ष्यिष्यत । ऐर्ष्यिष्यम् ऐर्ष्यिष्याव ऐर्ष्यिष्याम ।

आ.लि. - ईर्ष्यात् ईर्ष्यास्ताम् ईर्ष्यासुः । ईर्ष्याः ईर्ष्यास्तम् ईर्ष्यास्त । ईर्ष्यासम् ईर्ष्यास्व ईर्ष्यास्म ।

लुङ् - ऐर्ष्यीत् ऐर्ष्यिष्टाम् ऐर्ष्यिषुः । ऐर्ष्यीः ऐर्ष्यिष्टम् ऐर्ष्यिष्ट । ऐर्ष्यिषम् ऐर्ष्यिष्व ऐर्ष्यिष्म ।

- ईर्ष्यते ईर्ष्ययति ईर्ष्यियिषति

- ईर्ष्यित्वा समीर्ष्य ईर्ष्यितुं ईर्ष्यित ईर्ष्यितवत् ईर्ष्यत् ईर्ष्यिषत् ईर्ष्यणं ईर्ष्यकः ईर्ष्यितव्य ईर्ष्य ईर्ष्यणीय ईर्ष्यितृ ईर्ष्यिषिषा ईर्ष्यिषिषुः

- ईर्ष्या

## १०. ईह चेष्टायाम् (முயல)

### (अक सेट् आ)

**लट्** - ईहते ईहेते ईहन्ते। ईहसे ईहेथे ईहध्वे। ईहे ईहावहे ईहामहे।

**लङ्** - ऐहत ऐहेतां ऐहन्त। ऐहथाः ऐहेथां ऐहध्वम्। ऐहे ऐहावहि ऐहामहि।

**लोट्** - ईहतां ईहेतां ईहन्ताम्। ईहस्व ईहेथां ईहध्वम्। ईहै ईहावहै ईहामहै।

**विधिलिङ्** - ईहेत ईहेयातां ईहेरन्। ईहेथाः ईहेयाथां ईहेध्वम्। ईहेय ईहेवहि ईहेमहि।

**लिट्** - ईहाश्चक्रे ईहांचक्राते ईहाश्चक्रिरे। ईहाश्चकृषे ईहाश्चक्राथे ईहांचकृढ्वे। ईहाश्चक्रे ईहाश्चकृवहे ईहाश्चकृमहे।

**लुट्** - ईहिता ईहितारौ ईहितारः। ईहितासे ईहितासाथे ईहिताध्वे। ईहिताहे ईहितास्वहे ईहितास्महे।

**लृट्** - ईहिष्यते ईहिष्येते ईहिष्यन्ते। ईहिष्यसे ईहिष्येथे ईहिष्यध्वे। ईहिष्ये ईहिष्यावहे ईहिष्यामहे।

**लृङ्** - ऐहिष्यत ऐहिष्येतां ऐहिष्यन्त। ऐहिष्यथाः ऐहिष्येथां ऐहिष्यध्वम्। ऐहिष्ये ऐहिष्यावहि ऐहिष्यामहि।

**आशीर्लिङ्** - ईहिषीष्ट ईहिषीयास्तां ईहिषीरन्। ईहिषीष्ठाः ईहिषीयास्थां ईहिषीध्वम्। ईहिषीय ईहिषीवहि ईहिषीमहि।

**लुङ्** - ऐहिष्ट ऐहिषातां ऐहिषत। ऐहिष्ठाः ऐहिषाथां ऐहिड्ढ्वम्-ऐहिध्वम्। ऐहिषि ऐहिष्वहि ऐहिष्महि।

- ईह्यते ईहयति ईजिहिषते

- ईहित्वा समीह्य ईहितुं ईहित ईहितवत् ईहमानः ईजिहिषमाणः ईहनं ईहकः ईहितव्य ईह्य ईहनीय ईहितृ ईजिहिषा ईजिहिषुः ईहा

- समीहते சமாளிக்க விரும்புகிறான்.

## ११. ऊह वितर्के ஊஹிக்க

(सक सेट आ)

**लट्** - ऊहते ऊहेते ऊहन्ते। ऊहसे ऊहेथे ऊहध्वे। ऊहे ऊहावहे ऊहामहे।

**लङ्** - औहत औहेताम् औहन्त। औहथाः औहेथाम् औहध्वम्। औहे औहावहि औहामहि।

**लोट्** - ऊहताम् ऊहेताम् ऊहन्ताम्। ऊहस्व ऊहेथाम् ऊहध्वम्। ऊहै ऊहावहै ऊहामहै।

**विधिलिङ्** - ऊहेत ऊहेयाताम् ऊहेरन्। ऊहेथाः ऊहेयाथाम् ऊहेध्वम्। ऊहेय ऊहेवहि ऊहेमहि।

**लिट्** - ऊहाञ्चक्रे ऊहाञ्चक्राते ऊहाञ्चक्रिरे। ऊहाञ्चकृषे ऊहाञ्चक्राथे ऊहाञ्चकृढ्वे। ऊहाञ्चक्रे ऊहाञ्चकृवहे ऊहाञ्चकृमहे।

**लुट्** - ऊहिता ऊहितारौ ऊहितारः। ऊहितासे ऊहितासाथे ऊहिताध्वे। ऊहिताहे ऊहितास्वहे ऊहितास्महे।

**लृट्** - ऊहिष्यते ऊहिष्येते ऊहिष्यन्ते। ऊहिष्यसे ऊहिष्येथे ऊहिष्यध्वे। ऊहिष्ये ऊहिष्यावहे ऊहिष्यामहे।

**लृङ्** - औहिष्यत औहिष्येताम् औहिष्यन्त। औहिष्यथाः औहिष्येथाम् औहिष्यध्वम्। औहिष्ये औहिष्यावहि औहिष्यामहि।

**आशीर्लिङ्** - ऊहिषीष्ट ऊहिषीयास्ताम् ऊहिषीरन् । ऊहिष्ठाः ऊहिषीयास्थाम् ऊहिढ्वम् । ऊहिषीय ऊहिषीवहि ऊहिषीमहि ।

**लुङ्** - औहिष्ट औहिषाताम् औहिषत । औहिष्ठाः औहिषाथाम् औहिढ्वम् । औहिषि औहिष्वहि औहिष्महि ।

- ऊह्यते ऊहयति ऊजिहिषते ।

- ऊहित्वा समूह्य ऊहितुं ऊहित ऊहितवत् ऊहमान ऊजिहिषमाण ऊहनं ऊहकः ऊहितव्य ऊह्य ऊहनीय ऊहितृ ऊजिहिषा ऊजिहिषुः

- ऊहः अपोहः दुरूहः

## १२. कपि (कम्प) चलने அசைய, நடுங்க
## (अक-सेट्-आ)

**लट्** - कम्पते कम्पेते कम्पन्ते । कम्पसे कम्पेथे कम्पध्वे । कम्पे कम्पावहे कम्पामहे ।

**लङ्** - अकम्पत अकम्पेताम् अकम्पन्त । अकम्पथाः अकम्पेथाम् अकम्पध्वम् । अकम्पे अकम्पावहि अकम्पामहि ।

**लोट्** - कम्पताम् कम्पेताम् कम्पन्ताम् । कम्पस्व कम्पेथाम् कम्पध्वम् । कम्पै कम्पावहै कम्पामहै ।

**विधिलिङ्** - कम्पेत कम्पेयाताम् कम्पेरन् । कम्पेथाः कम्पेयाथाम् कम्पेध्वम् । कम्पेय कम्पेवहि कम्पेमहि ।

**लिट्** - चकम्पे चकम्पाते चकम्पिरे । चकम्पिषे चकम्पाथे चकम्पिध्वे । चकम्पे चकम्पिवहे चकम्पिमहे ।

**लुट्** - कम्पिता कम्पितारौ कम्पितारः । कम्पितासे कम्पितासाथे कम्पिताध्वे । कम्पिताहे कम्पितास्वहे कम्पितास्महे ।

**लृट्** - कम्पिष्यते कम्पिष्येते कम्पिष्यन्ते । कम्पिष्यसे कम्पिष्येथे कम्पिष्यध्वे । कम्पिष्ये कम्पिष्यावहे कम्पिष्यामहे ।

**लृङ्** - अकम्पिष्यत अकम्पिष्येताम् अकम्पिष्यन्त । अकम्पिष्यथाः अकम्पिष्येथाम् अकम्पिष्यध्वम् । अकम्पिष्ये अकम्पिष्यावहि अकम्पिष्यामहि ।

**आशीर्लिङ्** - कम्पिषीष्ट कम्पिषीयास्ताम् कम्पिषीरन् । कम्पिषीष्ठाः कम्पिषीयास्थाम् कम्पिषीढ्वम् । कम्पिषीय कम्पिषीवहि कम्पिषीवहि ।

**लुङ्** - अकम्पिष्ट अकम्पिषाताम् अकम्पिषत । अकम्पिष्ठाः अकम्पिषाथाम् अकम्पिढ्वम् । अकम्पिषि अकम्पिष्वहि अकम्पिष्महि ।

- कम्प्यते कम्पयति चिकम्पिषते

- कम्पित्वा प्रकम्प्य कम्पितुं कम्पित कम्पितवत् कम्पमान चिकम्पिषमाण कम्पनं कम्पकः कम्पितव्य कम्प्य कम्पनीय कम्पितृ चिकम्पिषा चिकम्पिषुः

- अनुकम्पते समनुकम्पते *பரிவு காட்டுகிறான்* प्रकम्पते विकम्पते *நடுங்குகிறான்.*

## १३. कमु कान्तौ விரும்ப

### (सक से आ)

**लट्** - कामयते कामयेते कामयन्ते । कामयसे कामयेथे कामयध्वे । कामये कामयावहे कामयामहे ।

**लङ्** - अकामयत अकामयेताम् अकामयन्त । अकामयथाः अकामयेथाम् अकामयध्वम् । अकामये अकामयावहि अकामयामहि ।

**लोट्** - कामयताम् कामयेताम् कामयन्ताम् । कामयस्व कामयेथाम् कामयध्वम् । कामयै कामयावहै कामयामहै ।

**वि.लि.** - कामयेत कामयेयाताम् कामयेरन् । कामयेथाः कामयेयाथाम् कामयेध्वम् । कामयेय कामयेवहि कामयेमहि ।

**लिट्** - कामयाञ्चक्रे-(अथवा) चकमे कामयाञ्चक्राते-चकमाते कामयाञ्चक्रिरे-चकमिरे । कामयाञ्चकृषे-चकमिषे कामयाञ्चक्राथे-चकमाथे कामयाञ्चकृढ्वे-चकमिध्वे । कामयाञ्चक्रे-चकमे कामयाञ्चकृवहे-चकमिवहे कामयाञ्चकृमहे-चकमिमहे ।

**लुट्** - कामयिता- (अथवा)कमिता कामयितारौ-कमितारौ कामयितारः-कमितारः । कामयितासे-कमितासे कामयितासाथे-कमितासाथे कामयिताध्वे-कमिताध्वे । कामयिताहे-कमिताहे कामयितास्वहे-कमितास्वहे कामयितास्महे-कमितास्महे ।

**लृट्** - कामयिष्यते- (अथवा) कमिष्यते कामयिष्येते-कमिष्येते कामयिष्यन्ते-कमिष्यन्ते । कामयिष्यसे-कमिष्यसे कामयिष्येथे-कमिष्येथे कामयिष्यध्वे-कमिष्यध्वे । कामयिष्ये-कमिष्ये कामयिष्यावहे-कमिष्यावहे कामयिष्यामहे-कमिष्यामहे ।

**लृङ्** - अकामयिष्यत- (अथवा) अकमिष्यत अकामयिष्येताम्-अकमिष्येताम् अकामयिष्यन्त-अकमिष्यन्त । अकामयिष्यथाः-अकमिष्यथाः अकामयिष्येथाम्-अकमिष्येथाम् अकामयिष्यध्वम्-अकमिष्यध्वम् । अकामयिष्ये-अकमिष्ये अकामयिष्यावहि-अकमिष्यावहि अकामयिष्यामहि-अकमिष्यामहि ।

**आ.लि.** - कामयिषीष्ट-कमिषीष्ट कामयिषीयास्ताम्-कमिषीयास्ताम् कामयिषीरन्-कमिषीरन् । कामयिषीष्ठाः-कमिषीष्ठाः कामयिषीयास्थां-कमिषीयास्थाम् कामयिषीढ्वम्-कामयिषीध्वम्-कमिषीध्वम् । कामयिषीय-कमिषीय कामयिषीवहि-कमिषीवहि कामयिषीमहि-कमिषीमहि ।

लुङ् - अचीकमत-अचकमत अचीकमेताम्-अचकमेताम् अचीकमन्त-अचकमन्त । अचीकमथाः-अचकमथाः अचीकमेथाम्-अचकमेथाम् अचीकमध्वम्-अचकमध्वम्। अचीकमे-अचकमे अचीकमावहि-अचकमावहि अचीकमामहि-अचकमामहि।

- काम्यते कामयति चिकामयिषते

- कामयित्वा-कमित्वा प्रकाम्य-प्रकम्य, कामयितुं-कमितुं कान्त-कान्तवत्, कामित कामितवत् कामयमान चिकामयिषमाण कामनं कामकः कामयितव्य काम्य-कम्य कामनीय-कमनीय कामयितृ - कमितृ चिकामयिषा चिकामयिषुः

- कम्रः कमलं कन्तुः (कामी) कमठः-कामः कान्तिः कामुकः

## १४. काक्षि (काङ्क्ष) काङ्क्षायां விரும்ப
### (सक सेट् प)

**लट्** - काङ्क्षति काङ्क्षतः काङ्क्षन्ति। काङ्क्षसि काङ्क्षथः काङ्क्षथ। काङ्क्षामि काङ्क्षावः काङ्क्षामः ।

**लङ्** - अकाङ्क्षत् अकाङ्क्षताम् अकाङ्क्षन् । अकाङ्क्षः अकाङ्क्षतम् अकाङ्क्षत । अकाङ्क्षम् अकाङ्क्षाव अकाङ्क्षाम।

**लोट्** - काङ्क्षतु-काङ्क्षतात् काङ्क्षताम् काङ्क्षन्तु। काङ्क्ष-काङ्क्षतात् काङ्क्षतम् काङ्क्षत। काङ्क्षाणि काङ्क्षाव काङ्क्षाम।

**विधिलिङ्** - काङ्क्षेत् काङ्क्षेताम् काङ्क्षेयुः । काङ्क्षेः काङ्क्षेतम् काङ्क्षेत । काङ्क्षेयम् काङ्क्षेव काङ्क्षेम।

**लिट्** - चकाङ्क्ष चकाङ्क्षतुः चकाङ्क्षुः । चकाङ्क्षिथ चकाङ्क्षथुः चकाङ्क्ष । चकाङ्क्ष चकाङ्क्षिव चकाङ्क्षिम।

लुट् - काङ्क्षिता काङ्क्षितारौ काङ्क्षितारः । काङ्क्षितासि काङ्क्षितास्थः काङ्क्षितास्थ । काङ्क्षितास्मि काङ्क्षितास्वः काङ्क्षितास्मः ।

लृट् - काङ्क्षिष्यति काङ्क्षिष्यतः काङ्क्षिष्यन्ति । काङ्क्षिष्यसि काङ्क्षिष्यथः काङ्क्षिष्यथ । काङ्क्षिष्यामि काङ्क्षिष्यावः काङ्क्षिष्यामः ।

लृङ् - अकाङ्क्षिष्यत् अकाङ्क्षिष्यताम् अकाङ्क्षिष्यन् । अकाङ्क्षिष्यः अकाङ्क्षिष्यतम् अकाङ्क्षिष्यत । अकाङ्क्षिष्यम् अकाङ्क्षिष्याव अकाङ्क्षिष्याम ।

**आशीर्लिङ्** - काङ्क्ष्यात् काङ्क्ष्यास्ताम् काङ्क्ष्यासुः । काङ्क्ष्याः काङ्क्ष्यास्तम् काङ्क्ष्यास्त । काङ्क्ष्यासम् काङ्क्ष्यास्व काङ्क्ष्यास्म ।

लुङ् - अकाङ्क्षीत् अकाङ्क्षिष्टाम् अकाङ्क्षिषुः । अकाङ्क्षीः अकाङ्क्षिष्टम् अकाङ्क्षिष्ट । अकाङ्क्षिषम् अकाङ्क्षिष्व अकाङ्क्षिष्म ।

- काङ्क्ष्यते काङ्क्षयति चिकाङ्क्षिषति

- काङ्क्षित्वा आकाङ्क्ष्य काङ्क्षितुं काङ्क्षित काङ्क्षितवत् काङ्क्षन् चिकाङ्क्षिषन् काङ्क्षणं काङ्क्षकः काङ्क्षा काङ्क्षितव्य काङ्क्ष्य काङ्क्षणीय काङ्क्षितृ चिकाङ्क्षिषा चिकाङ्क्षिषुः

## १५. काशृ दीप्तौ ஒளியுடன் விளங்க
## (अक सेट् आ)

लट् - काशते काशेते काशन्ते । काशसे काशेथे काशध्वे । काशे काशावहे काशामहे ।

लङ् - अकाशत अकाशेतां अकाशन्त । अकाशथाः अकाशेथां अकाशध्वं । अकाशे अकाशावहि अकाशामहि ।

लोट् - काशतां काशेतां काशन्ताम् । काशस्व काशेथां काशध्वं । काशै काशावहै काशामहै ।

**विधिलिङ्** - काशेत काशेयातां काशेरन्। काशेथाः काशेयाथां काशेध्वं। काशेय काशेवहि काशेमहि।

**लिट्** - चकाशे चकाशाते चकाशिरे। चकाशिषे चकाशाथे चकाशिध्वे। चकाशे चकाशिवहे चकाशिमहे।

**लुट्** - काशिता काशितारौ काशितारः। काशितासे काशितासाथे काशिताध्वे। काशिताहे काशितास्वहे काशितास्महे।

**लृट्** - काशिष्यते काशिष्येते काशिष्यन्ते। काशिष्यसे काशिष्येथे काशिष्यध्वे। काशिष्ये काशिष्यावहे काशिष्यामहे।

**लृङ्** - अकाशिष्यत अकाशिष्येतां अकाशिष्यन्त। अकाशिष्यथाः अकाशिष्येथां अकाशिष्यध्वं। अकाशिष्ये अकाशिष्यावहि अकाशिष्यामहि।

**आशीर्लिङ्** - काशिषीष्ट काशिषीयास्तां काशिषीरन्। काशिषीष्ठाः काशिषीयास्थां काशिषीध्वं। काशिषीय काशिषीवहि काशिषीमहि।

**लुङ्** - अकाशिष्ट अकाशिषातां अकाशिषत। अकाशिष्ठाः अकाशिषाथां अकाशिध्वं। अकाशिषि अकाशिष्वहि अकाशिष्महि।

प्रायेण प्रपूर्वकोऽयं धातुः। प्रकाशते प्राकाशत प्रकाशतां इत्यादि रूपाणि।

- प्रकाश्यते प्रकाशयति प्रचिकाशिषते

- काशित्वा प्रकाश्य प्रकाशितुं प्रकाशित प्रकाशितवत् प्रकाशमान प्रचिकाशिषमाण प्रकाशनं प्रकाशकः प्रकाशितव्य प्रकाश्य प्रकाशनीय प्रकाशितृ प्रचिकाशिषा प्रचिकाशिषुः

- सङ्काशः नीकाशः आकाशः

- प्रकाशते *ஒளியுடன் விளங்குகிறான்*. प्रतिकाशते सङ्काशते *போன்று விளங்குகிறான்*. विकाशते *மலர்கிறது*.

## १६. कूज अव्यक्ते शब्दे கூவ

### (अक सेट् प)

कूजति अकूजत् कूजतु कूजेत् चुकूज कूजिता कूजिष्यति अकूजिष्यत् कूज्यात्।

लुङ् - अकूजीत् अकूजिष्टां अकूजिषुः। अकूजीः अकूजिष्टं अकूजिष्ट। अकूजिषं अकूजिष्व अकूजिष्म।

- कूज्यते कूजयति चुकूजिषति

- कूजित्वा सङ्कूज्य कूजितुं कूजित कूजितवत् कूजत् चुकूजिषत् कूजनं कूजकः कूजितव्य कूज्य कूजनीय कूजितृ चुकूजिषा चुकूजिषुः

## १७. कृष विलेखने உழ, இழுக்க

### (सक अनि प)

- कर्षति अकर्षत् कर्षतु कर्षेत्।

**लिट्** - चकर्ष चकृषतुः चकृषुः। चकर्षिथ चकृषथुः चकृष। चकर्ष चकृषिव चकृषिम।

**लुट्** - कर्ष्टा कर्ष्टारौ कर्ष्टारः। कर्ष्टासि कर्ष्टास्थः कर्ष्टास्थ। कर्ष्टास्मि कर्ष्टास्वः कर्ष्टास्मः। (अथवा) क्रष्टा क्रष्टारौ क्रष्टारः इत्यादि।

**लृट्** - कर्क्ष्यति कर्क्ष्यतः कर्क्ष्यन्ति। कर्क्ष्यसि कर्क्ष्यथः कर्क्ष्यथ। कर्क्ष्यामि कर्क्ष्यावः कर्क्ष्यामः। (अथवा) क्रक्ष्यति क्रक्ष्यतः इत्यादि।

**आशीर्लिङ्** - कृष्यात् कृष्यास्तां इत्यादि।

**लृङ्** - अक्रक्ष्यत् अक्रक्ष्यतां अक्रक्ष्यन्। अक्रक्ष्यः अक्रक्ष्यतं अक्रक्ष्यत। अक्रक्ष्यं अक्रक्ष्याव अक्रक्ष्याम। (अथवा) अकर्क्ष्यत् इत्यादि।

लुङ् - अकार्क्षीत् अकार्ष्टां अकार्क्षुः । अकार्क्षीः अकार्ष्टं अकार्ष्ट । अकार्क्षं अकार्क्ष्व अकार्क्ष्म । अथवा अक्राक्षीत् अक्राष्टां इत्यादि ।

- कृष्यते कर्षयति चिकृक्षति ।

- कृष्ट्वा विकृष्य क्रष्टुं - कर्ष्टुं कृष्ट कृष्टवत् कृषत् चिकृक्षत् कर्षणं कर्षकः क्रष्टव्य - कर्ष्टव्य कृष्य कर्षणीय क्रष्टृ चिकृक्षा चिकृक्षुः

- कृषिः कृष्णः कर्षः *(1/4 பலம்)* उत्कर्षः अवकर्षः प्रकर्षः सन्निकर्षः

- अपकर्षति अवकर्षति *இழுத்து அகற்றுகிறான். கீழ் இழுக்கிறான்* आकर्षति *தன்பக்கம் இழுக்கிறான்.* उत्कर्षति परिकर्षति *மேல் இழுக்கிறான்.* निकर्षति *அமிழ்த்துகிறான்.* निष्कर्षति *பிடுங்குகிறான்.* सन्निकर्षति *அருகே இழுக்கிறான்.*

## १८. क्रदि आह्वाने रोदने च கூப்பிட, அழ

### (आह्वाने सक-रोदने अक-सेट् प)

क्रन्दति अक्रन्दत् क्रन्दतु क्रन्देत्

लिट् - चक्रन्द चक्रन्दतुः चक्रन्दुः । चक्रन्दिथ चक्रन्दथुः चक्रन्द । चक्रन्द चक्रन्दिव चक्रन्दिम ।

लुट् - क्रन्दिता क्रन्दितारौ क्रन्दिताारः । क्रन्दितासि क्रन्दितास्थः क्रन्दितास्थ । क्रन्दितास्मि क्रन्दितास्वः क्रन्दितास्मः ।

क्रन्दिष्यति अक्रन्दिष्यत् क्रन्द्यात् ।

लुङ् - अक्रन्दीत् अक्रन्दिष्टां अक्रन्दिषुः । अक्रन्दीः अक्रन्दिष्टं अक्रन्दिष्ट । अक्रन्दिषं अक्रन्दिष्व अक्रन्दिष्म ।

- क्रन्द्यते, क्रन्दयति, चिक्रन्दिषति

- क्रन्दित्वा, आक्रन्द्य क्रन्दितुं क्रन्दित क्रन्दितवत् क्रन्दत् चिक्रन्दिषत् क्रन्दनं क्रन्दकः क्रन्दितव्य क्रन्द्य क्रन्दनीय क्रन्दितृ चिक्रन्दिषा चिक्रन्दिषुः

आक्रन्दयति- தொடர்ந்து உரக்க அழுகிறான். संक्रन्दनः இந்திரன்.

## १९. क्रमु पादविक्षेपे காலடி வைக்க, தாண்ட (सक सेट् प) (सार्वधातुके क्राम्य इत्यपि)

लट् - क्रामति क्रामतः क्रामन्ति । क्रामसि क्रामथः क्रामथ । क्रामामि क्रामावः क्रामामः । (अथवा) क्राम्यति क्राम्यतः क्राम्यन्ति । क्राम्यसि क्राम्यथः क्राम्यथ । क्राम्यामि क्राम्यावः क्राम्यामः ।

लङ् - अक्रामत् अक्रामताम् अक्रामन् । अक्रामः अक्रामतम् अक्रामत । अक्रामम् अक्रामाव अक्रामाम । (अथवा) अक्राम्यत् अक्राम्यतां अक्राम्यन् । अक्राम्यः अक्राम्यतं अक्राम्यत । अक्राम्यं अक्राम्याव अक्राम्याम ।

लोट् - क्रामतु क्रामताम् क्रामन्तु । क्राम क्रामतम् क्रामत । क्रामाणि क्रामाव क्रामाम । (अथवा) क्राम्यतु क्राम्यताम् क्राम्यन्तु । क्राम्य क्राम्यतम् क्राम्यत । क्राम्याणि क्राम्याव क्राम्याम ।

विधिलिङ् - क्रामेत् क्रामेताम् क्रामेयुः । क्रामेः क्रामेतम् क्रामेत । क्रामेयम् क्रामेव क्रामेम । (अथवा) क्राम्येत् क्राम्येताम् क्राम्येयुः । क्राम्येः क्राम्येतम् क्राम्येत । क्राम्येयम् क्राम्येव क्राम्येम ।

लिट् - चक्राम चक्रमतु; चक्रमुः । चक्रमिथ चक्रमथुः चक्रम । चक्राम-चक्रम चक्रमिव चक्रमिम ।

लुट् - क्रमिता क्रमितारौ क्रमितारः । क्रमितासि क्रमितास्थः क्रमितास्थ । क्रमितास्मि क्रमितास्वः क्रमितास्मः ।

लृट् - क्रमिष्यति क्रमिष्यतः क्रमिष्यन्ति । क्रमिष्यसि क्रमिष्यथः क्रमिष्यथ । क्रमिष्यामि क्रमिष्यावः क्रमिष्यामः ।

लृङ् - अक्रमिष्यत् अक्रमिष्यताम् अक्रमिष्यन् । अक्रमिष्यः अक्रमिष्यतम् अक्रमिष्यत । अक्रमिष्यम् अक्रमिष्याव अक्रमिष्याम ।

**आशीर्लिङ्** - क्रम्यात् क्रम्यास्ताम् क्रम्यासुः । क्रम्याः क्रम्यास्तम् क्रम्यास्त । क्रम्यासम् क्रम्यास्व क्रम्यास्म ।

लुङ् - अक्रमीत् अक्रमिष्टाम् अक्रमिषुः । अक्रमीः अक्रमिष्टम् अक्रमिष्ट । अक्रमिषम् अक्रमिष्व अक्रमिष्म ।

**आत्मनेपदे** - क्रमते अक्रमत क्रमतां क्रमेत

लिट् - चक्रमे चक्रमाते चक्रमिरे । चक्रमिषे इत्यादि

लुट् - क्रमिता क्रमितारौ क्रमितारः । क्रमितासे इत्यादि

लृट् - लृङ् - क्रमिष्यते अक्रमिष्यत ।

**आशीर्लिङ्** - क्रमिषीष्ट इत्यादि

लुङ् - अक्रमिष्ट अक्रमिषातां इत्यादि ।

- क्रम्यते क्रमयति चिक्रमिषति ।

- क्रान्त्वा - क्रमित्वा - क्रन्त्वा आक्रम्य क्रमितुं क्रान्त क्रान्तवत् क्राम्यन् - क्रामन् क्रममाण चिक्रमिषत् चिक्रमिषमाण क्रमण क्रमकः क्रमितव्य क्रम्य क्रमणीय क्रन्तृ चिक्रमिषा चिक्रमिषुः

- नक्रः विक्रमः पराक्रमः क्रमुकः कृमिः क्रिमिः क्रमः क्रान्तिः ।

- आपूर्वः प्रपूर्वः, परापूर्वः विपूर्वः आत्मनेपदे – आक्रमते इत्यादि

